॥ श्रीवेङ्कटेश्वरस्तोत्रम् ॥

चतुरश्चतुरः सकृत्पुमर्थान्
चतुरोदातुं इवोद्वहन् भुजान् यः ।
करुणावरुणालयः समिन्धे
फणिशैते शरणन्तमाश्रयामः ॥ १॥

नमस्कर्मीकुर्मोस् नटजन मनोभीष्ट घटना
पटियांसं शेषक्षितिधरशिरोभूषण मणिम् ।
त्रिलोकीनिर्माणस्थितिहरणलीलासुरषिकम्
श्रियःकान्तंदेवं सुगुणनिधिं अस्मत्कुलगुरुम् ॥ २॥

श्रीमद् वेङ्कटशैलशेखरतटे सञ्चारमातन्वती
निष्कम्पां तटितं सदैव दधति भूयो अमृतं वर्षति ।
सौहार्दं च धनञ्जये विधदती ध्यातुं तमोधुन्वति
पुष्याद्वोनितरां प्रमोदलतिकां या कापि कादम्बिनीम् ॥ ३॥

जयन्ति श्रीकान्तप्रणयरसधारा मधुरिपोः
कटाक्षः कारुण्यामृतजलधिकल्लोलनिकराः ।
त्रिलोकि कल्याणप्रणयनमहाकल्पविटपाः
श्रितस्वान्तध्वान्तप्रषमकरणादित्यकिरणः ॥ ४॥

अहीनशैलस्थं अहीनवैभवं महो यदा भाति महोत्सवः सताम्
निरन्तरं तं निगमान्तगोचरं चिरन्तनं चेतसि चिन्तयामहम् ॥ ५॥

॥ इति श्री वट्टेपल्ले नरकण्ठीरव शास्त्रि विरचितम्
श्री वेङ्कटेश्वरस्तोत्रं समाप्तम् ॥